| | |
|---|---|
| ‡ द्रव्य-स्तव-भाव स्तव स्व-रूपम् = तद-ऽन्यतरम् | इह |
| | भवति |
| एतत् = अन-ऽन्तरोक्तम् | द्रष्टव्यम् , :— |
| अन्यो-ऽन्य-समनुविद्धम् = गुण-प्रधाना-ऽन्यतर-प्रत्यासत्त्या मियो-व्याप्तम् | निश्चयतः |
| | भणित विषयमेव = अर्हद्-गो-चरमेव । |

"एक विषयाणाम्—
पुष्पा-ऽऽमीष स्तुति-प्रतिपत्तीनामयोत्तर प्राधान्यम् ॥ १००॥"

"जइणो वि हु दव्व-त्थय-भेओ अणुमोयणेण अत्थि" त्ति.।
एअं च इत्थ णेयं इय सि[सु]द्धं तंत-जुत्तीए. ॥१०१॥

पञ्चा० ६-२८ ॥

| | |
|---|---|
| ‡ "यतेरऽपि | अनुमोदनेन |
| द्रव्य-स्तव-भेद =द्रव्य-स्तव-लेशा-ऽनुवेध | अस्त्येव ।" |
| एतच्च— | एवम |
| अत्र | शुद्धम |
| ज्ञेयम्=अनुमोदनम् | तन्त्र-युक्त्या = वक्ष्य-माणया, — ॥१०१॥ |

तंतम्मि वंदणाए पूअण-सक्कार-हेऊ उस्सग्गो ।
जइणो वि हु णिद्दिट्ठो. ते पुण दव्व-त्थय-स-रूवे. ॥१०२॥

पञ्चा० ६-२९ ॥

| | |
|---|---|
| ‡ तन्त्रे=सिद्धान्ते | उत्सर्गः = कायोत्सर्ग |
| वन्दनायाम् | यतेरऽपि |
| पूजन-सत्कार-हेतु = "एतद-ऽर्थम" इत्य ऽर्थः | निर्दिष्टः। |

"पूअण-वत्तियाए

सक्कार-वत्तियाए" इति-वचनात् ।

तौ पुनः = पूजा-सत्कारौ | द्रव्य-स्तव-रूपौ = नान्य-स्व-रूपौ ।

इति-गाथा-ऽर्थः ॥ १०२ ॥

मल्ला-ऽऽइएहिं पूआ, सक्कारो पवर-वत्थमा-ऽऽईहिं ।
अण्णे—"विवज्जओ इह," दुहा वि दव्व-त्थओ इत्थ. ॥१०३॥

पञ्चा० ६-३० ॥

माल्या-ऽऽदिभिः
पूजा,
तथा—

सत्-कारः
प्रवर-वस्त्रा-ऽलङ्कारा-ऽऽदिभिः ।

‡ अन्ये
"विपर्ययः"

इह=वचने [प्रवचने]—"

"वस्त्रा-ऽऽदिभिः पूजा,
माल्या-ऽऽदिभिः सत्-कारः" व्याचक्षते ।

‡ "सर्वथा
द्विधाऽपि = यथा तथाऽस्तु [अस्तु]

द्रव्य-स्तवः
अत्र=अभिधेयः" इति ध्येयम् ॥१०३

तत्र—

एव युक्त्य ऽन्तरमाऽऽह, :—

ओसरणे बलिमा-ऽऽई ण चेह जं भगवया वि पडिसिद्धं,।
ता एस अणुण्णाओ उचिआणं गम्मइ तेण. ॥ १०४ ॥

पञ्चा० ६-३१ ॥

‡ समवसरणे
बल्या-ऽऽदि = द्रव्य-स्तवा-ऽङ्गम्,
न च
इह—

यद्—
भगवताऽपि = तीर्थ-करेणाऽपि
प्रतिषिद्धम् ।

‡ तद्
एषः = अत्र द्रव्य स्तव
अनुज्ञातः

तेन = तीर्थ-करेण
उचितेभ्यः = प्राणिभ्यः
गम्यते = चेष्टा-समान-शीलेन
मौनेन व्यञ्जकेन ॥१०४॥

न य भयवं अणुजाणइ जोगं मुक्ख-वि-गुणं कयाचिदऽवि।
तय-ऽणुगुणो वि अ तओ ण बहु-मओ होइ अण्णेसिं ? ॥१०५॥
पञ्चा० ६-३२ ॥

न च
भगवान्
अनुजानाति

योगम् = व्यापारम्
मोक्ष-विगुणम्
कदाचिदऽपि = मोहा-ऽ-भावात् ।

तद-ऽनुगुणोऽपि च
असौ = योगः
न

बहु-मतः
भवति
अन्येषाम् ?
किन्तु, बहु-मत एव ।

"इति-अर्थतः—
सोऽपि द्रव्य स्तवः
अनुमति क्रोडी कृतो भवति ।" इति ॥ १०५ ॥

"भाव एव भगवतोऽनुमोद्यः, न द्रव्यम् ।" इत्या-ऽऽशङ्काम्—
सत्-कार्य-नयेन—
द्रव्ये—
भाव-सत्ता ऽभ्युपगमनेन—
निरस्यन्नाऽऽह, :—

"जो चेव भाव-लेसो, सो चेव य भगवओ बहु-मओ उ ।
ण तओ विणेयरेणं. ति," अत्थओ सो वि एमेव " ॥१०६॥
पञ्चा० ६-३३ ॥

‡ य एव
भाव-लेशः,
स एव च
भगवतः
बहु-मतः।

"अ-पुनर्बन्धका-ऽऽदि-चतुर्दश-गुण-स्थाना-ऽन्तर-भावतः,
तदा-ऽऽज्ञा-विषयत्वात्।

तत्र--
इष्ट-साधनता-व्यञ्जक-व्यापारस्यैव
तद-ऽनुमतित्वात्।

हीन-भावत्वेन—
अन-ऽनुमोद्यत्वे,
अति-प्रसङ्गात्।

अवदाम चोपदेश-रहस्ये, :—

"जइ हीणं दव्व-त्थयं, अणुमणेज्जा ण संजमो" त्ति मई,।
ता "कस्स विसुद्ध-जोगं तित्थ-यरो नाऽणुमणिज्जे ?" ॥ त्ति

"न
तकः = भाव-लेशः
विना
इतरेण = द्रव्य-स्तवेन।"

इति
अर्थतः
सोऽपि = द्रव्य-स्तवोऽपि
एवमेव = अनुमत एव ॥ १०६ ॥

एतदेव स्पष्टयति, :—

**"कज्जं इच्छंतेणं अण-ऽंतरं कारणं पि इट्ठं तु",।**
**जह आहार-ज-तित्तिं इच्छंतेणेह आहारो. ॥ १०७ ॥**

पञ्चा० ६-३४ ॥

"कार्यम्,
इच्छता
अन-ऽन्तरम् = अ-क्षेप-[मोक्ष-]-फल-
कारि
कारणम्
अपि
इष्टम् = एव भवति।"

"कथम् ?"
यथा—
आहार-जाम्
तृप्तिम्

इच्छता
इह=लोके
आहारः–[इष्टः] दृष्ट ।

इति-गाथा ऽर्थः

‡ "अपा-ऽर्थ-पुद्-गल-व्यवधानेनाऽपि—
भाव स्तवे—
द्रव्य-स्तवस्य हेतुत्वात् ।"
"कथमऽन-ऽन्तर कारणत्वम् ?" इति चेत्—
ऋजु सूत्रा-ऽऽदि-नयेन ।
कथचित्—
तन् नये—
तत् स्थलीया-ऽन ऽन्तर-भाव स्यैव पुरस्कारात् ।
व्यवहार-नयेन तु—
[ द्वारेण ] द्वारिणोऽन्यथा सिद्धय-ऽभावात्,
अन ऽन्तर-कारणत्वम-ऽविरुद्धमेव ।"
इति व्युत्पादितम्—
अध्या-ऽऽत्म मत-परीक्षा-ऽऽदौ ॥ १०७ ॥
भयना-ऽऽवावऽपि विधिमाऽऽह, :—

जिण-भवण-कारणा-ऽऽइ वि भरहा-ऽऽईणं ण निवारियं तेणं,।
जह तेसि चिय "कामा सल्ल-विसा-ऽऽईहिं णाए[वयणे]हिं. १०८

॥ पञ्चा० ६-३५ ॥

‡ जिन-भवन कारणा-ऽऽद्यऽपि=द्रव्य-
स्तव रूपम्
भरता ऽऽदीनाम् = श्रावकाणाम्
‡ यथा—
तेषामेव = भरता ऽऽदीनाम्
कामाः

न
निवारितम्
तेन = भगवता,
शल्य विषा-ऽऽदिभिः
[वचनैः] = ज्ञातैः= [दृष्टा-ऽन्तैः ]
निवारिता ।

"सल्लं कामा, विसं कामा"

इत्याऽऽदि-प्रसिद्धेः ।"

इत्य-ऽर्थः ॥ १०८ ॥

**ता, तं पि अणुमयं चिय अ-पडिसेहाओ तंत-जुत्तीए. ।**
**इय सेसाण वि इत्थं अणुमोअणमा ऽऽइ अ-विरुद्धं. ॥१०९॥**

पञ्चा० ६-३६ ॥

‡ तत्,
तदऽपि=जिन भवन-कारणा-ऽऽद्यपि
अनुमतमेव,

अ-प्रतिषेधात् = कारणात्
तन्त्र-युक्त्या, :—

"अ-निषिद्धमऽनुमतम्" इति तन्त्र-युक्तिः ।

‡ "इय०" एवम् = भगवदऽनुज्ञानात्
शेषाणामऽपि = साधूनाम्

अत्र = द्रव्य-स्तवे
अनुमोदना-ऽऽदि
अ-विरुद्धम् ।

आदि-शब्दात्—

कारणोपदेशा-ऽऽदि-ग्रहः ॥ १०९ ॥

‡ युक्त्य-ऽन्तरमाऽऽह, :—

**जं च चउद्धा भणिओ विणओ. उवयारिओ उ जो तत्थ,।**
**सो तित्थ-यरे णियमा ण होइ दव्व-त्थयाद ऽन्नो. ॥११०॥**

पञ्चा० ६-३७ ॥

यः (यश्च)
चतुर्द्धा

भणितः
विनयः=ज्ञान-दर्शन-चारित्र-लोको-
पचारिक-भेदात् ।

औपचारिकः=विनयः
तु
यः,
तत्र = विनय-मध्ये,
सः
तीर्थ-करे

नियमात् = अवश्यंतया
न
भवति
द्रव्य-स्तवात्—
अन्यः ।

किन्तु [ अपि तु ], द्रव्य-स्तव एव ॥ ११० ॥

एअस्स उ संपाडण-हेउं तह हंदि वदणाए वि ।
पूअणमा-ऽऽदुच्चारणमुववन्नं होइ जइणो वि. ॥१११॥

पञ्चा० ६-३८ ॥

‡ एतस्य=लोकोपचार-विनयैक रूप द्रव्य-स्तवस्य
(तु)
सदादन-हेतोः = सपादना-ऽर्थम्
तथा–
"हृदि" = इत्युपदर्शना-ऽर्थम्
वन्दनायामऽपि=सूत्र-रूपायाम्
"पूअण-वत्तियाए" [इत्या-ऽऽदि]
उपपन्नम्
भवति
यतेरऽपि ॥ १११ ॥

इअरहा, अण-ऽत्थगं तं. ण य तय-ऽणुच्चारणेण सा भणिया. ।
ता अभि-संधारणओ संपाडणमिट्ठमेअस्स. ॥ ११२ ॥

पञ्चा० ६-३९॥

इतरथा = तु
अन ऽर्थकम्
न च
तद-ऽनुच्चारणेन---
‡ तत् = तस्मात्
अभि-सन्धारणेन – विशिष्टेच्छा-रूपेण
तद् = उच्चारणम् ।
सा = [वन्दना] विविता
भणिता=[यतेः] ।
संपादनम्—
इष्टम्
एतस्य=द्रव्य स्तवस्य ।

इति गाथा-ऽर्थः ॥ ११२ ॥

सक्खा उ कसिण-संजम-दव्वा-ऽ-भावेहि णो अय (जइणो) इट्ठु ।
गम्मइ तं त-ट्ठिइए-"भाव-प्पहाणा हि मुणउ." त्ति. ॥११३॥

पञ्चा० ६-४० ॥

| | |
|---|---|
| ‡ "साक्षात्तु=स्व-रूपेणैव | अयम् |
| कृत्स्न-संयम-द्रव्या-ऽ-भावाभ्याम्= | इष्टः--द्रव्य स्तवः" इति |
| कारणाभ्याम् | गम्यते |
| न | तन्त्र-स्थित्या=पूर्वा-ऽ-पर-निरूपणेन,:- |

गर्भा-ऽर्थमाऽऽह, :—

"भाव-प्रधाना हि मुनयः" इति कृत्वा ।

"उपसर्जनमयम् " ।

इति गाथा-ऽर्थः ॥ ११३ ॥

एएहिं तो अण्णे धम्मा-ऽहिगारीहं जे उ, तेसिं तु. ।
सक्खं चिय विण्णेयो. भाव-ऽंगतया, जओ भणियं, :—॥११४॥
पञ्चा० ६-४१ ॥

| | |
|---|---|
| ‡ एतेभ्यः मुनिभ्यः | इह |
| अन्ये | ये = श्रावकाः |
| धर्मा-ऽधिकारिणः | तु, |
| तेषां तु | साक्षादेव _ स्व-रूपणैव |
| विज्ञे | भावा-ऽङ्गतया = हेतु-भूतया । |
| यतः | भणितम्=[वक्ष्यमाणम्], :- ॥११४॥ |

'अ-कसिण-पवत्तगाणं विरया-ऽ-विरयाण एस खलु जुत्तो. ।
संसार-पयणु-करण दव्व-त्थए कूव-दिट्ठ-ऽन्तो." ॥११५॥
पञ्चा० ६-४२ ॥

| | |
|---|---|
| अ-कृत्स्न-प्रवर्तकानाम्=संयममऽधिकृत्य | युक्तः=स्व-रूपेणैव |
| विरता-ऽ-विरतानाम् = प्राणिनाम् | संसार-प्रतनु-करणः=शुभा-ऽनुबन्धात् |
| एषः | द्रव्य-स्तवः । |
| खलु | |

| | |
|---|---|
| द्रव्ये-स्तवे = तस्मिन् | कूप-दृष्टा-ऽन्त = प्रसिद्ध-कथानक-गम्य ॥ ११५ ॥ |

‡ आक्षिप्य समाधत्ते, :—

सो खलु पुप्फा-ऽऽइओ तत्थुत्तो, ण जिण-भवणमा-ऽऽई वि ।
आइ-सद्दा वुत्तो, तय-ऽ-भावे कस्स पुप्फा-ऽऽई ? ॥११६॥

पञ्चा० ६-४३ ॥

| | |
|---|---|
| "स खलु = द्रव्य-स्तव पुष्पा-ऽऽदिकः | तत्रोक्तः = "पुप्फा ऽऽइ ण इच्छंति ।" इति प्रतिषेध प्रत्यासन्नः [प्रतिषेध प्रत्यासत्तेः] |

न
जिन-भवना ऽऽदिरऽपि = अनाकारात्" ।

| | |
|---|---|
| तत्राऽऽह, :— "आदि शब्दात् | उक्तः = जिन भवना ऽऽदिरऽपि । |
| तद्-ऽ भावे = जिन-भवना-ऽऽद्य-ऽभावे | कस्य पुष्पा-ऽऽदि- ? । |

इति गाथाऽर्थः ॥ ११६ ॥

"णु तत्थेव य मुणिणो पुप्फा-ऽऽइ-णिवारणं फुडं अत्थि."।
अत्थि तय, सय करणं पहुच्च, नऽणुमोयणा-ऽऽइ वि " ॥११७॥

पञ्चा० ६-४४ ॥

| | |
|---|---|
| ‡ "ननु तत्रैव च=स्तवा ऽधिकारे मुने | पुष्पा-ऽऽदि निवारणम् स्फुटम् अस्ति— |

"णो कसिण-संजम०"

इत्या ऽऽदि-वचनात् ।"

‡ एतदाऽऽशङ्कयाऽऽह, :—

अस्ति | तत् = सत्यम्,

किन्तु—

स्वयं करणं | प्रतीत्य=निवारणम् ,

न तु | अनुमोदना-ऽऽद्य-ऽपि=प्रतीत्यः

इति-गाथा-ऽर्थः ॥ ११७ ॥

‡ एतदेव समर्थयति, :—

**सुव्वइ अ वयर-रिसिणा कारवणं पि अ अणुट्ठि अमिमस्स.।**
**वायग-गंथेसु तहा एअ-गया देसणा चेव. ॥ ११८ ॥**

पञ्चा० ६ ४५ ॥

श्रूयते च, :-
"वज्र-ऽर्षिणा=पूर्व-धरेण
कारवणमऽपि च=तत्त्वतः[करणमऽपि]
अनुष्ठितम्

एतस्य=द्रव्य-स्तवस्य,
" माहेसरी उ० "
पूरिअं०] इत्या-ऽऽदि-वचनात् ।"

तथा—
वाचक-ग्रन्थेषु=[ तथा, धर्म-रत्न-माला-ऽऽदिषु च ]
एतद्-गता=[ जिन-भवना-ऽऽदि-द्रव्य-स्तव-गता ]

देशनाऽपि
चैव=दृश्यते [ श्रूयते ]।
"यस्तृणमयीमऽपि० " इत्याऽऽदि-वचनात् ।
['' जिन-भवनम्०" इत्या-ऽऽदि।]॥११८

**आहे[ह,:-"ए]वं"हिंसा वि हु धम्माय ण दोस-यारिणी"त्ति ठियं.।**
**एवं च-"वेय-विहिआ णेछिज्जइ सेह." वामाहो." ॥११९ ॥**

‡ आह, :—
"एवम् = द्रव्य-स्तव-विधाने
"हिंसाऽपि=(खलु)
[धर्माय=[क्रियमाणी]

न
दोष-कारिणी ।"
इति स्थितम्=न्यायतः,

तामऽन्तरेण द्रव्य स्तवा ऽ-भावात् ।

एवं च = [स्थिते सति]
वेद-विहिता=[याग-विधाने]
सा = हिंसा

इह = विचारे
न
इष्यते, स

व्यामोहः—भवताम्, तुल्य-योग क्षेमत्वात् ।" ॥ ११९ ॥

"पीडा-गरी" त्ति. "अह सा". "तुल्लमिणं हंदि अहिगयाए वि."।
'ण य पीडाउ अ-धम्मो णियमा, विज्जेण वभिचारा." ॥१२०॥

"पीडा-कारिणी ।" इति
अथ

सा = वेद विहिता-हिंसा ।"

एतदाऽऽशङ्क्य, आह, —

"तुल्यम्
इदम्
हंदि

अधि-कृतायामऽपि = जिन भवना-
ऽऽदि हिंसायामऽपि ।"

उपपत्त्य-ऽन्तरमाऽऽह, —

"न च
पीडातः
वैद्येन =

अ धर्मः
नियमात् = एका ऽन्तेनैव,
व्यभिचारात्,

हित-कृतस्तस्यौपघात्
पीडोत्पत्तावऽप्यऽ धर्माऽनुपपत्तेः ।" ॥ १२० ॥

"अह, तेसिं परिणामे सुहं तु." "तेसिं पि सुव्वइ एअं. ।
तक्खणणे वि ण धम्मो भणिओ पर-दारगा-ऽऽईणं." ॥१२१॥

‡ "अथ
तेषाम्=जिन-भवना ऽऽदौ हिंस्य-
मानानाम्

परिणामे
सुखमेव,
इत्य-ऽदोष ।"

एतदाऽऽशङ्क्याऽऽह, :—

तेषामऽपि=यागे हिंस्यमानानाम् | श्रूयते
एतद्=[ सुखम् ] स्वर्ग-पाठात् ।"

उपपत्त्य-ऽन्तरमाऽऽह, :—

' तज्-जननेऽपि=सुख-जननेऽपि | भणितः
न | पारदारिका-ऽऽदीनाम् ।
धर्मः

"तस्मात्, एतदऽपि व्यभिचारि ।" इति-गाथा-ऽर्थः ॥ १२१ ॥

"सिय." "तत्थ सुहो भावो तं कुणमाणस्स" "तुल्लमेअं पि."।
इयरस्स वि सुहो च्चिय णेयो इयरं कुणंतस्स." ॥१२२॥

"स्याद् ।"

"तत्र=जिन-भवना-ऽऽदौ | ताम्=हिंसाम्
शुभोभावः | कुर्वतः, इति ।"

एतदाऽऽशङ्क्य आह, :—

"तुल्लम् | एतदऽपि ।"

"कथम् ?" इति आह, :—

"इतरस्याऽपि=वेद-विहित-हिंसा-कर्तुः | ज्ञेयः = भावः
शुभः | इतराम् = वेद-विहितां हिंसाम्
एव | कुर्वतः = याग-विधानेन" ॥१२२॥

"एगिंदिया-ऽऽई अह ते." "इयरे थोव. "त्ति." ता किमेएणं?।"
"धम्म-ऽत्थं सव्वं च्चिय वयणा एसा न दुट्ठ". "त्ति."॥१२३॥

"एकेन्द्रिया-ऽऽदयः | ते=जिन-भवना-ऽऽदौ (ये) हिंस्यंते ।"
अथ

एतदा-ऽऽशङ्क्य, आह, :—

"इतरे
स्तोकाः=वेदाद् यागे हिस्यन्ते"।

"तत्
किम्
"धर्मा-ऽर्थम् =
सर्वम्
एषा = हिंसा
न
एतेन = तवाऽभिनिवेशेन ?
[भेदा-ऽभिनिवेशेन ?]"
एव = सामान्येन
वचनात्,
दुष्टा।"
ति। इति गाथा-ऽर्थ ॥१२३॥

एवम्—
पूर्व-पक्षे प्रवृत्ते सति,
† आह, :—

"एयंपि ण जुत्ति-खमं, ण वयण-मित्ता उ होइ एवमिअं.।
संसार-मोयगाण वि धम्मा-ऽ-दोस-प्पसगाओ" ॥१२४॥

एतदऽपि
न
युक्ति-क्षमम् = यदुक्त परेण,
"कुतः ?" इति, आह, :—
न
वचन मात्रात् = अनुपपत्तिकात्
भवति
एवम
एतत् = सर्वम् [मेव]"
"कुतः ?" इति, आह, :—
ससार-मोचकानामऽपि = वचना-
द्धिसा कारिणाम (अपि)
धर्मस्य = "दु खिनो हन्तव्याः।"
इत्यस्य—
अ-दोष-प्रसङ्गात् = अ दुष्टत्वा-ऽऽ
पत्ते।" इत्य ऽर्थः।
[धर्मा ऽ दोष प्रसगात्, धर्म प्रसङ्गात्, अ दोष-प्रसङ्गाच्च।] ॥ १२४ ॥

"सिय, 'तं ण सम्म-वयणं" इयरं सम्म-वयणं." ति किं माण ?"
"अह लोग च्चिय." णेवं [न] तहा (ऽ-) पाठा, विगाणा य" ॥१२५

‡ "स्यात्,

"तत् = संसार मोचक-वचनम् | न सम्यक् = वचनम्।"

इत्याऽऽशङ्क्य, आह, :—

"इतरद् = वैदिकम् सम्यग् वचनम्" | इति किं मानम् ?"

"अथ, | लोक एव = मानम्।"

इत्या-ऽऽशङ्क्य, आह, :—

"न | एतत् तथा,

[न, तहाऽ-पाठा] = लोकस्य प्रमाण तयाऽ-पाठात्;

अन्यथा, प्रमाणस्य षट्-संख्या-विरोधात्।

तथा,

अ-विगानाच्च = न हि "वेद-वचनं प्रमाणम्।" इत्येकवाक्यता लोकानाम्, इति (?) ॥ १२५ ॥

"अह पाढोऽभिमओ च्चिय, विगाणमऽपि एत्थ थोवगाणं उ."।
"एत्थं पि ण प्पमाणं, सव्वेसिं अ-दंसणाओ उ." ॥१२६॥

अथ पाठः अभिमतः | एव = लोकस्य प्रमाण-मध्ये, षण्णामुपलक्षणत्वात्

"विगानमऽपि = अत्र = वेदे-वचना-ऽ-प्रामाण्ये | स्तोकानामेव = लोकानाम्।"

एतदाऽऽशङ्क्य, आह, :—

अत्राऽपि=कल्पनायाम् [एवं कल्पनयाम्] न प्रमाणम् | सर्वेषाम् = लोकानाम्, अ-दर्शनादेव="अल्पत्व-बहुत्वे निश्चया-ऽ-भावात्" इत्य-ऽर्थः ॥ १२६ ॥

किं तेसिं दंसणेणं अप्प-बहुत्तं जहित्थ, तह चेव ।
सव्वत्थ समवसेयं णेवं वभिचार-भावाओ. ॥१२७॥

‡ "किम्
तेषाम्
अल्प बहुत्वम्
यथा
इह = मध्य-देशा ऽऽदौ वेद-वचन-प्रमाण प्रति,

सर्वेषाम् = लोकानाम्
दर्शनेन ?
तथैव
सर्वत्र=क्षेत्रा-ऽन्तरेष्वपि
समवसेयम् = लोकरवा-ऽऽदि-हेतुभ्यः, इति ।"

‡ अत्राऽऽह, --
"नैवम् ,
व्यभिचार-भावात्=कारणात् ॥१२७
एतदेवाऽऽह, --

अग्गा-ऽऽहारे बहुगा दिसंति दिआ, तहा ण सुद्द त्ति।
ण य तद्दंसणओ च्चिय सव्वत्थ इमं हवइ एवं ॥१२८॥

अग्रा-ऽऽहारे
बहव
दृश्यन्ते
ब्राह्मणाः,

तथा
न
शूद्रा
इति=ब्राह्मणवद् बहवो दृश्यन्ते,

न च
तद् दर्शनादेव = अग्रा-ऽऽहारे बहु द्वि ज-दर्शनादेव
सर्वत्र = भिल्ल पल्ल्या ऽऽदावऽपि

एतद्
भवति
एव = द्वि-ज-बहुत्वम् , इति ।
॥गाथा ऽर्थ. ॥१२८॥

‡ उपपत्त्य-ऽन्तरमाह, --

'ण य "बहुगाणऽपि इत्थं अ-विगाणं सोहणं."ति नियमोऽयं."।
"ण य "णो थोवाणं पि हु," "मूढेयर-भाव-जोएणं". ॥१२९॥

"न च
'बहूनामऽपि
अत्र = लोके
"न च
"न स्तोकानामऽपि = न शोभनमेव ",
"मूढानां बहूनामऽपि न शोभनम्,
अ-मूढस्य स्तोकस्यैव," इति-भावः
[बहूनामऽपि मूढ-व्यापार भावात्, स्तोकानामऽपि चाऽ-भावात् ।] ॥१२९॥

अ-विगानम् = एक-वाक्यता रूपम्,
शोभनम् ।"
इति नियमोऽप्यस्तु ।"
(इति नियमः), ["कुतः ?" इति, आह- ]
मूढेतर-भाव-योगेन ।"

"ण य 'रागा-ऽऽइ-विरहिओ कोऽवि माया विसेस-कारि" त्ति"।
"जं सव्वे वि अ पुरिसा रागा-ऽऽइ-जुआ उ." पर-पक्खे.॥१३०॥

‡ "न च
'रागा-ऽऽदि-विरहित' सर्वज्ञः
कश्चित्
मता=प्रमाता
["कुतः ?" इति, आह, :— ]
"यत्,
सर्वेऽपि
पर-पक्षे = मीमांसकस्य
सर्वज्ञा-ऽनऽभ्युपगमत्वात् ॥ १३० ।'

विशेष-कारी=विशेष-ज्ञात् ।"
इति =
[य एवं वेद, :—"वेदिकमेव प्रमा-
णम्, नेतरद् । इति ]"
पुरुषाः
रागा-ऽऽदि-युता एव ।"

‡ दोषा-ऽन्तरमाह, :—

"एवं च वयण-मित्ता धम्मा-ऽ-दोसाइ मिच्छ-गाणं पि ।
घायंताणं दि-अ-वरं पुरओ णणु चंडिआ-ऽऽईणं. ॥१३१॥

एवं च = प्रमाण-विशेषा-ऽ-परिज्ञाने
सति,
वचन-मात्रात्=सकाशात्

धर्मा-ऽ-दोषौ [ते]=प्राप्नुतः
म्लेच्छा-ऽऽदीनामऽपि=भिल्ला-
ऽऽदीनामऽपि ।

["क्व ?" इति आह, —

घातयताम्
द्वि-ज वरम्=ब्राह्मण पुरतम्
पुरत.

ननु
चण्डिका-ऽऽदीनाम्=देवता विशेषा णाम् ॥ १३१॥

["एवं च-चण्डिका-ऽऽदीना देवता विशेषाणा पुरतः द्वि-ज वरं घातयता म्लेच्छका-ऽऽदीनामऽपि ननु वचन-मात्रात् धर्मा ऽ दोषो भवेताम्" इत्यन्वयः । म० )

"न य तेसिं पि ण वयणं एत्थ निमित्तं" ति, जं ण सव्वे उ.।
तं तह घायंति सया, अ-स्सुअ-तच्चोयणा-वक्का". ॥१३२॥

‡ "न च
तेषामऽपि=म्लेच्छानाम्
न वचनम्

अत्र = द्वि ज घाते
निमित्तम्"
इति । किन्तु वचनमेव ।"

"कुत ?" इति, आह, :—

"यत,
न
सर्वं एव=म्लेच्छा
तत् = द्वि-ज वरम्
तथा

घातयन्ति
(सदा) [तदा] (,)
अ श्रुत-तच्-चोदना-वाक्याः=[द्वि ज घात चोदना वाक्यात्] अ श्रुत तच् चोदना वाक्य द्वि ज-घाति-विधि वाक्य यं, ते, तथा" ॥१३२॥

"अह "तं ण एत्थ रूढं" "एअ पि ण तत्थ." तुल्लमेवेयं." ।
"अह "तं थोवमणु च्चियं" "इमं पि एयारिस तेसिं." ॥१२३॥

‡ "अथ,
"तद् = म्लेच्छ प्रवर्तक वचनम्

न
अत्र = लोके
रूढम् ? ।"

इत्या-ऽऽशङ्क्य, आह, :—

| | |
|---|---|
| "एतदऽपि = वैदिकम् (यऽपि) न | तत्र = भिल्ल-मते [ म्लेच्छ-लोके] रूढम् ।" इति । |
| "तुल्यमेव | इदम् = अन्यतरा-ऽ-रूढत्वात् ।" |

अथ,

| | |
|---|---|
| "तत् = म्लेच्छ-प्रवर्तकं वचनम् | स्तोकम्, अनुचितम् = अ-संस्कृतम् ।" |

इत्या-ऽऽशङ्क्य, आह, :—

| | |
|---|---|
| "इदम् = वैदिक-चोदना-वाक्यम् अपि | एता-दृशम् = [ईदृशमेव-स्तोका-ऽऽदि-धर्मकम्, ] तेषाम् = [म्लेच्छानाम्, आशय-भेदात् ।] ॥ १३३ ॥ |

[१३४-१३५-गाथयोः सम्यग् नाऽवबुध्यते ऽवचूरिका । यथैव मुद्रिते, तथैव कलकत्ता-तपागच्छीय-पुस्तका-ऽऽलय-स्थ-हस्त-लिखित-पुस्तके पाठः प्रायः । न गाथयोरवचूरिः, किन्तु द्वयोरवतरणिका-रूपेण पूर्वमेव कथञ्चित् पाठः । तथापि छायां कृत्वा, अर्थ संगति-करणे प्रयासः कृत उपरिष्टात् । पञ्च-वस्तु-महा-ग्रन्थे, स्तव-परिज्ञा-ग्रन्थस्थ तयोर्गाथयोर्मूले ऽवचूरिके चात्रैव कोष्टका-ऽन्तरे प्रदर्शिते, अन-ऽन्य-गतिकत्वात् । संपादकः]

["अह तं वेय-ऽगं खलु" "न तं पि एमेव" "इत्थ वि ण माणं।"
"अह-तथा-ऽ-सवणमिणं" सिएअमुच्छिन्न-साहं तु."॥१३४॥

| | |
|---|---|
| ‡ अथ तत् (ण) | वेदा-ऽङ्गम् खलु = द्वि-ज-प्रवर्तकम् ।" |

इत्या-ऽऽशङ्क्या आह, :—

| | |
|---|---|
| ‡ "न तदऽपि—म्लेच्छ-प्रवर्तकम् | एवमेव = वेदे ।" इति |

‡ "अत्राऽपि | मानम् ।"
न |
: "अथ | अ श्रवणम्—
तत्र = वेदे | इदम् = मानम् ।
न हि तद् वेदे श्रूयते"

इत्या ऽऽशङ्क्य, आह, —
स्याद् | उत्सन्न शास्त्र तु = उत्सन्न शास्त्रमेतदपि
एतद्, | संभाव्यते ।"

इति गाथा-ऽर्थं ॥ १३४ ॥

"ण य तव्वयणाओ च्चिय तदुभय-भावो ति, तुल्ल-भणिईओ."॥
अण्णा वि कप्पणेवं साहम्म-विहम्मओ दुट्ठा. ॥ १३५॥

"न च | तदुभय भावः = धर्मा ऽ दोष-भाव ,
तद्-वचनात् = वेद-वचनादेव | इति ।
"कुतः ?" इत्याऽऽह, :—
तुल्य भणितेः = म्लेच्छ-वचनादेव ।"
"एतदुभयम् = इत्यऽपि वक्तुं शक्यत्वात्," इत्य ऽर्थ ।

अन्याऽपि | भिल्ल-परिग्रहीतत्वा ऽऽदि प्रकारेण,
कल्पना = ब्राह्मण परिग्रहीतत्वा- | साधर्म्य वैधर्म्यत = कारणात्
ऽऽदि रूपा, | दुष्टा ।
एवम् = उपायत्—

इति गाथाऽर्थः ॥ १३५ ॥ ]

"म्लेच्छ-प्रवर्तकमेव यदेऽ स्त, न हि ज प्रवर्तकम्, श्रवण मात्रत्वाऽ-तयस्त्वात् । अ श्रवणस्योच्छिन्न शास्त्रत्वेनोपपत्तेः" इति तैरपि वक्तु शक्य-त्वात् इति । (१३४)

अन्याऽपि कल्पना = ब्राह्मण परिगृहीतत्वादि रूपा भिल्ल-परिगृहीतत्वा ऽऽदि, तुल्यत्वेन दुष्टा, (१३५) इत्याऽऽह, —

"अह तं ण वेइअं खलु." "न तं पि एअेव, इत्थ वि ण माणं, ।"
'अह तत्थाऽ-स्सवणमिदं हविज्ज, उच्छिण्ण-साहत्ता. ॥ १३४ ॥
ण य तव्विवज्जणाओ उचिय-भावोऽत्थ, तुल्ल-भणिईओ. ।
अण्णा वि कप्पणाइ साहम्म-विहम्मओ तुच्छा. ॥ १३५ ॥
("अथ-तद्-न वैदिकं खलु" "न तदऽपि एवमेव, अत्राऽपि न मानम्", ।
"अथ-तत्रा ऽ-श्रवणमिदं भवेत्, उच्छिन्न शाखत्वात् ॥ १३४ ॥
न च तद्-विवर्जनात् उचित-भावोऽत्र, तुल्य भणितितः. ।
अन्याऽपि कल्पना साधर्म्य-वैधर्म्य तोतुच्छा. ॥ १३५ ॥) (?)

‡ यस्मादेवम्,

"तम्हा ण वयणमित्तं सव्वत्थऽ-विसेसओ बुह-जणेणं ।
एत्थ पवित्ति-णिमित्तं, एअं दट्ठव्वयं होइ." ॥ १३६ ॥

तस्मात्
न
वचन-मात्रम् = उपपत्ति-शून्यम्
सर्वत्र
अ-विशेषतः=कारणात्
बुध-जनेन = [विद्वज्जनेन]

अत्र=लोके
प्रवृत्ति निमित्तम् = [हिंसा-ऽऽदौ]
[एअं=एतद्]
द्रष्टव्यम्
भवति ।
["न" इति वर्तते (?) ] ॥ १३६ ॥

"किं पुण विसिट्ठगं चिय, जं दिट्ठिट्ठाहिँ णो खलु विरुद्धं, ।
तह संभवं [त-रूवं] स-रूवं विआणिऊं सुद्ध-बुद्धिए ! ॥ १३७ ॥

‡ किं पुनर्

विशिष्टमेव=वचनं प्रवृत्ति-निमित्त-
मिह द्रष्टव्यम् ।

'किं भूतम् ?" इत्याऽऽह, :—
यद्
दृष्टेष्टाभ्याम्
न खलु

विरुद्धम् = "तृतीय-स्थान-संक्रान्तम्"
इत्य-ऽर्थः ।

तथा,
संभवत्-स्व-रूपम् = यद् "न पुन ,– अत्य ऽन्ता ऽ सम्भवि" इति
विचार्य
शुद्ध-बुद्ध्या = मध्य स्थया।
इति गाथा-ऽर्थः ।।१३७।।

जह, इह, दव्व-थयाओ भावा-ऽऽत्थय-रूप्प-गुण-जुआउ [सेओ]।
जयणाए पिडुवगारो जिण-भवण-कारणाऽऽई उ [द्''त्ति] न विरुद्धं
॥ १२८ ॥

"यथा,
द्रव्य-स्तवात्
भावा ऽऽपत्स्तव-गुण युक्तात्
नाऽन्यथा स्यात्,
यतनया = यत्नेन
पीडोपकार = पीडया उपकार,
बहु गुण भावात्
"इति
इह = प्रवचने,
"किं भूतात् ?" इत्याऽऽह,
श्रेयस [ ज्यायत् ]
जिन भवन कारणा-ऽऽदे द्रव्य स्तवात् ।"
न
विरुद्ध – एतत्'।
इति गाथा-ऽर्थः ॥ १२८ ॥

‡ एतदेव स्पष्टयति, .—

सइ सव्वत्था-ऽ-भावे जिणाणं, भावा-ऽऽवयाए जीवाणं,।
तेसिं तित्थरण-गुणं णियमेण इह तदा-ऽऽययणं. ॥१२९॥

‡ सदा
सर्वत्र – [illegible]
भावा-ऽऽपदि = [illegible]
तेषाम् - [ जीवानाम् ]
निस्तर-गुणम् =
नियमेन = [illegible]
अभावे
जिनानाम् ,
जीवानाम
इह = लोके
तदा ऽऽयतनम् – जिना-ऽऽयतनम् ।
इति गाथा-ऽर्थः ॥ १२९ ॥

तब्बिंबस्स पइट्ठा, साहु-णिवासो अ, देसणा-ऽऽइ अ, ।
इक्कक्कं आवा-ऽऽवय-नित्थरण-गुणं तु भव्वाणं. ॥१४०॥

‡ तब्बिंबस्स = जिन-बिम्बस्य | पइ-ट्ठा = प्रतिष्ठा,
‡ तत्र, तथा-विध—
साहु निवासश्च = विशागतः ।
‡ देशना-ऽऽदयश्च | [आदि-शब्दात्=ध्याना-ऽऽदि-परिग्रहः]
‡ एकैकम् = तद्-बिम्ब-प्रतिष्ठा-ऽऽदि | एव
अत्र— | भव्यानाम् = प्राणिनाम् ।१४०॥
आवा-ऽऽपद्-निस्तरण-गुणम्

पीडा-गरी वि एवं एत्थ पुढवा-ऽऽइ-हिंस-जुत्ताओ· ।
अण्णेसिं गुण-साहण-जोगाओ दीसइ इहं तु [हेव] ॥१४१॥

‡ पीडा-कारिण्यऽपि | पृथ्व्या-ऽऽदि हिंसा
एवम् | युक्ता
अत्र = जिन-भवने | एव,
अन्येषाम् = प्राणिनाम् | गुण-साधन-योगात् ।
दृश्यते | इह
एतच्च = गुण-साधनम् | एव,– । इति-गाथा-ऽर्थः ॥१४१॥

आरंभवओ य इमा आरंभ-ऽंतर-निवित्तिका पायं. ।
एवं वि हु अ-णियाणा इट्ठा, एसा वि मुक्ख-फला. ॥१४२॥

‡ आरम्भवतश्च | आरम्भा-ऽन्तर-निवृत्ति-दा
इमा=विहिता (हिंसा) | प्रायः=विधिना कारणात् ।
एवमऽपि च | परस्य–
अ-निदाना=विहिता, | इष्टा=च ।

एषाऽपि=पीडा | मोक्ष-फला="न अभ्युदयायैव।"

इति गाथा-ऽर्थः ॥ १४२ ॥

**ता एयम्मि [एईए] अ-हम्मो णो, इह जुत्तं पि विज्ज-णायमिणं।**
**हंदि गुणहं ऽतर-भावा. इहरा, विज्जस्स वि अ-धम्मो.॥१४३॥**

‡ तत्=तस्मात्,
अस्याम्=पीडायाम्
इह
युक्तमऽपि
हंदि
‡ इतरथा=अ-विधिना,
गुणा-ऽन्तरा ऽ-भावे,

अ-धर्मः
न="गुण-भावेन" इति (-हेतोः)।
वैद्य ज्ञातम्
इदम्=प्रागुक्तम्।
गुणा-ऽन्तर भावात्=दर्शित चैतद्।
वैद्यस्याऽपि
अ धर्म =एव, पीडायां स्यात्, इति ॥ १४३॥

**ण य वेय-गया चेवं सम्मं, आवय गुण-ऽन्निया एसा,।**
**ण य दिट्ठ-गुणा, तज्जुय-तय-ऽतर-णिव्वित्ति-आ नेव.॥१४४॥**

‡ न च
वेद-गता[ऽपि]
‡ आपद्-गुणा ऽन्विता

एवम्=जिन-भवना ऽऽदि हिंतावत्
सम्यग्,
एषा=हिंसा,

तामऽन्तरेणाऽपि जीवाना माया-ऽऽपदोऽ भावात्।

‡ न च | दृष्ट गुणा=साधु निवासा ऽऽदिवत्,

तया ऽनुपलब्धे।

‡ तद्-युक्त-तद-ऽन्तर-निवृत्ति दा=
हिंसा युक्त क्रिया ऽन्तर-निवृत्ति-दा

नैव=न हि।

"प्राक् तद्-यध प्रवृत्ता याज्ञिका" ॥ १४४ ॥

"ण य फलुद्देस-पवित्तिओ इयं मोक्ख-साहगा वि' त्ति ।
मोक्ख-फलं च सु-वयणं, सेसं अत्था-ऽऽइ-वयणं समं.॥१४५॥

‡ "न च फलोद्देश-प्रवृत्तितः इयम् = हिंसा मोक्ष साधिका अपि" इति ।

"श्वेतं वायव्यमऽजमाऽऽलभेत् भूति कामः ।"
इत्या-ऽऽदि-श्रुतेः ।

‡ मोक्ष-फलं च सु वचनम् = "स्वा-ऽऽगमे" इत्य-ऽर्थः।

‡ शेषम् = अर्था-ऽऽदि-वचन-समम् = "फल-भावेऽपि अर्थ-शास्त्रा-ऽऽदि-तुल्यम् ।

इति-गाथा-ऽर्थः ॥ १४५ ॥

इहैवाऽऽगम-विरोधमाऽऽह, :—

"अग्गी मा एआओ एणाओ मुंचउ." त्ति य सुई वि. ।
तप्पाव-फला 'अंधे तमसि" इच्चा-ऽऽइ य सई वि. ॥१४६॥

‡ "अग्निः माम् एतस्मात् = हिंसा कृताद् एनसः = पापात् मुञ्चतु = छान्दसत्वात्, मोचयतु." इति श्रुतिरऽपि = विद्यते, "वेद-वाग्" इत्य-ऽर्थः ।

‡ तत्-पाप-फलात् = तदुक्त-हिंसा-फलात्, "अन्धे तमसि०" इत्या-ऽऽदिश्च स्मृतिरऽपि = विद्यते ।

"अन्धे तमसि मज्जामः पशुभिर्ये यजामहे ।
हिंसा नाम भवेद्धर्मो न भूतो न भविष्यति ॥"

इति-वचनात् । इति-गाथा-ऽर्थ ॥१४६॥

अत्थि जओ, ण य "एसा अण्ण-ऽत्था" [तीरइ] सक्कए इहं भणिउ.।
अ-विणिच्छया. ण येवं इह सुव्वए पाव-वयणं तु. ॥१४७॥

| | |
|---|---|
| "अस्ति | यत =श्रुति स्मृतिश्च ।" |
| न च | शक्यते |
| "एषा=[श्रुति स्मृतिश्च] | इह |
| अन्या ऽर्था = अ-विधि-दोष-निष्पङ्ग-पापा ऽर्था ।" | वक्तुम् । |

"कुत ?" इत्याऽऽह, —
अ-विनिश्चयात् = "प्रमाणा ऽ-भावात्" इत्य ऽर्थ ।

| | |
|---|---|
| ‡ न च | श्रूयते |
| एवम् | पाप वचनम्=प्रवचने |
| इह=जिन-भवना ऽऽद्यौ | (तु) ॥ इति गाथा-ऽर्थः ॥१४७॥ |

परिणामे य [म-सु] सुहं णो तेसिं इच्छिज्जइ, ण य सुहं पि. ।
मदा-ऽ-पत्थ-कय-समं. ता तमुवण्णास-मित्तं तु. ॥१४८॥

| | |
|---|---|
| ‡ परिणामे च | तेषाम्= जिन भवना ऽऽद्यौ हिंस्य-मानानाम् |
| सुखम् | |
| न | इष्यते=नशिमित्त जैनैः । |
| ‡ न च | मन्दा-ऽ-पथ्य कृत-समम् = विपाक-दारुणमिष्यते । |
| सुखम् | |
| ‡ यस्मादेवम्, | |
| तस्मात्, | तदुपन्यास मात्रमेव |

[यदुक्तम्—
"अह तेसिं परिणाम० [१२१]" इत्या-ऽऽदिना] ॥ १४८ ॥

इय दिट्ठेट्ठ-विरुद्धं जं वयणं, एरिसा पवत्तस्स, ।
मिच्छा-ऽऽइ-भाव-तुल्लो सुह-भावो होंदि विण्णेयो. ॥१४९॥

| | |
|---|---|
| ‡ "इय" एवम् | यद् |
| दृष्टेष्ट-विरुद्धम् | वचनम्, |

| | |
|---|---|
| ईदृशात् | म्लेच्छा-ऽऽदि-भाव-तुल्यः |
| प्रवृत्तस्य=सतः | शुभ-भावः |
| | हंदि विज्ञेयः = मोहात् । |

इति-गाथा-ऽर्थः ॥ १४९ ॥

‡ "एगिंदिया-ऽऽइ अह ते० [१२३]" इत्या-ऽऽदि यदुक्तम्, तत्परिहारा-ऽर्थमाऽऽह, :—

**"एगिंदिया-ऽऽइ-भेयोऽवित्थ णणु पाव-भेय-हेउ"त्ति ।**
**इट्ठो तएऽवि स-मए तह सुद्द-दि-आ-ऽऽइ-भेएणं. ॥१५०॥**

| | |
|---|---|
| ‡ "एकेन्द्रिया-ऽऽदि-भेदोऽपि | ननु |
| अत्र=व्यति करे | पाप-भेद-हेतुः" |
| इति | स्व-मते |
| इष्टः | तथा=तेन प्रकारेण |
| तवाऽपि | शूद्र-द्वि-जा-ऽऽदि-भेदेन । |

इति-गाथा-ऽर्थः ॥ १५० ॥

‡ एतदेवाऽऽह, :—

**"सुद्दाण सहस्सेणऽवि ण बंभ-हच्चेह घाइएणं" ति. ।**
**जह, तह अप्प-बहुत्तं, एत्थ वि गुण-दोस-चिंताए. ॥१५१॥**

| | |
|---|---|
| शूद्राणाम् | इह |
| सहस्रेणाऽपि | घातितेन" |
| न | इति |
| ब्रह्म-हत्या | यथा=भवताम्, |
| तथा | अत्राऽपि— |
| अल्प-बहुत्वम् | गुण-दोष-चिन्तायाम्=ज्ञेयम् |

इति-गाथा-ऽर्थः ॥ १५१ ॥

**अप्पा य होइ एसा एत्थं जयणाए वट्टमाणस्स. ।**
**जयणा उ धम्म-सारो विण्णेया सव्व-कज्जेसु. ॥ १५२ ॥**

| | |
|---|---|
| ‡ अल्पा च | अत्र |
| भवति | यतनया |
| एषा=हिंसा | वर्तमानस्य=जिन-भवना ऽऽदौ । |
| यतना च | विज्ञेया |
| धर्म सारः [हृदयम्] | सर्व-कार्येषु = ग्लाना ऽऽदिषु । |

"यतना भाव शुद्धिरूपा
हेत्व-ऽनुबन्ध-हिंसा-ऽ भावे
स्व-रूपत पर्यवसानमेवाऽल्पत्वम् ।
न चाऽल्पोऽपि ततो बन्धः ।

"इह्य एसा वि मोक्ख-फला ।" [१४२] इति
प्रागेवोक्तत्वात् ।
"अणुमित्तोऽपि ण कस्सऽइ बन्धो
वर वत्थु-पच्चया भणिओ." त्ति सैद्धान्तिकाः ॥ १५२ ॥

**जयणेह धम्म-जणणी. जयणा धम्मस्स पालणी चेव. ।**
**तव्वुड्ढि-करी जयणा. एग-ऽंत-सुहा-ऽऽवहा जयणा.॥१५३**

पञ्चा० ९-३०

| | |
|---|---|
| यतना | धर्म जननी = ततः प्रसूते । |
| इह | |
| यतना | धर्मस्य पालना चैव=प्रसूत-रक्षणात् । |
| तद्-वृद्धि कारिणी | यतना = इत्थ तद्-वृद्धेः । |
| एका-ऽन्त-सुखा ऽऽवहा | यतना = सर्वतोभद्रत्वात् । |

इति गाथा-ऽर्थः ॥ १५३ ॥

जयणाए वट्टमाणो जीवो सम्मत्त-णाण-चरणाणं ।
सद्धा-बोहा-ऽऽसेवण-भावेणाऽऽराहगो भणिओ. ॥१५४॥

पञ्चा० ॥ ७-३१ ॥

यतनया वर्तमानो जीवः
परमा-ऽर्थेन—
सम्यक्त्व-ज्ञान-चरणानाम्=
त्रयाणामऽपि

श्रद्धा बोधा-ऽऽसेवन-भावेन=हेतुना
आराधकः
भणितः=तथा-प्रवृत्तेः ।
इति-गाथा-ऽर्थः ॥ १५४ ॥

एसा य होइ णियमा तय-ऽहिग-दोस-विणिवारणी जेण, ।
तेण णिवित्ति-पहाणा विण्णेया बुद्धिमंत्तेणं. ॥ १५५ ॥

पञ्चा० ७-३२ ॥

एषा च भवति नियमात्=यतना
तद-ऽधिक-दोष-निवारिणी
येन=अनुबन्धेन,

तेन
निवृत्ति-प्रधाना= तत्त्वतः

विज्ञेया
बुद्धिमता=सत्त्वेन ॥ १५५ ॥

सा इह परिणय-जल-दल-विसुद्ध-रूवा उ होई विण्णेया. ।
अत्थ-व्वओ महंतो, सव्वो सो धम्म-हेउ" त्ति. ॥१५६॥

पञ्चा० ७-३३ ॥

सा=यतना
इह=जिन-भवना-ऽऽदौ
परिणत-जल-दल-विशुद्धि-रूपा

एव
भवति
विज्ञेया=प्रासुक-ग्रहणेन ।

अर्थ-व्ययः
यद्यऽपि—
महान्=भवति तत्र,

तथाऽपि—
सर्वोऽसौ
धर्म-हेतुः=स्थान-नियोगात् ।

इति-गाथा-ऽर्थः ॥ १५६ ॥

‡ प्रसङ्गमाऽऽह, :—

एत्तो च्चिय णिद्दोसं सिप्पा-ऽऽइ-विहाणमो जिणिंदस्स ।
लेसेण स-दोसं पि हु बहु-दोस-णिवारणत्तेणं. ॥ १५७ ॥
वर-बोहि-लाभओ सो सव्वुत्तम-पुण्ण-संजुओ भयवं, ।
एग-ऽंत-पर-हिअ-रओ, विसुद्ध-जोगो, महा-सत्तो, ॥१५८॥
जं बहु-गुणं पयाणं, तं णाऊणं, तहेव देसेइ, ।
तं रक्खंतस्स तओ जओचिअं कह भवे दोसो ? ॥१५९॥
तत्थ पहाणो अंसो बहु-दोस-निवारणेह जग-गुरुणो. ।
नागा-ऽऽइ-रक्खणे जह कड्ढण-दोसे वि सुह-जोगो. ॥१६०॥
एवं णिवित्ति-पहाणा विण्णेया तत्तओ अहिंसेयं. ।
जयणावओ उ विहिणा पूआ-ऽऽइ-गया वि एमेव. ॥१६१॥

पञ्चा० ७-३५-३६ ३७ ३८-४२ ॥

आसा व्याख्या , :—

| | |
|---|---|
| अत एव=यतना-गुणात् | जिनेन्द्रस्य = आद्यस्य |
| निर्दोषम् | लेशेन |
| शिल्पा-ऽऽदि-विधानम् = [अपि] | स दोषमऽपि = सत्, |

बहु दोष निवारणत्वेन = अनुबन्धत. । इति-गाथा-ऽर्थः १५७ ॥

एतदेवाऽऽह, :—

| | |
|---|---|
| वर बोधि-लाभतः = सकाशात् | सर्वोत्तम-पुण्य-सयुक्तः, = |
| सः [असौ] = जिनेन्द्र | भगवान्, |

एका-ऽन्त-पर-हित-रतः = तत् स्व-भावत्वात्,

विशुद्ध जोगः,

महा-सत्त्व ,=इति गाथा ऽर्थ ॥ १५८ ॥

| | |
|---|---|
| यद् बहु-गुणम् | प्रजानाम्= प्राणिनाम् । |
| तद् | ज्ञात्वा, |
| तथैव | देशयते = भगवाँस्तावत्, |
| [तान् रक्षतः] | ततः यथोचितम्=अनुबन्धतः, |
| कथं भवेत् | दोषः=?, नैव । |

इति-गाथा-ऽर्थः ॥ १५९ ॥

एतदेव स्पष्टयति, :—

| | |
|---|---|
| तत्र=शिल्पा-ऽऽदि-विधाने प्रधानः अंशः | बहु-दोष-निवारणा इह= [जगति] जगद्-गुरोः । |
| नागा-ऽऽदि-रक्षणे यथा= जीवित-रक्षणेन | आ-कर्षण-दोषेऽपि=कण्टका-ऽऽदेः शुभ-योगः=भवति । |

इति-गाथा-ऽर्थः ॥ १६० ॥

| | |
|---|---|
| ‡ एवम्— निवृत्ति-प्रधाना =अनुबन्धमऽधिकृत्य विज्ञेया | तत्त्वतः अ हिंसा इयम् =जिन-भवना-ऽऽदि-हिंसा । |
| यतनावतस्तु विधिना=क्रियमाणा | पूजा-ऽऽदि गताऽपि एवमेव=तत्त्वतोऽ-हिंसा । |

इति-गाथा-ऽर्थः ॥ १६१ ॥

प्रसङ्गमाऽऽह, :—

सिय, "पूआओवगारो ण होइ कोऽवि पूअणिज्जाणं, ।
कय-किच्चत्तणओ तह जायइ आसायणा चेवं. ॥१६२॥

स्यात् ।

‡ "पूजया | कश्चिद्
उपकारः=तुष्टया-ऽऽदि रूप | इह
न भवति | पूज्यानाम्=तीर्थ-कृताम्,
कृत कृत्यत्वात्=इति युक्ति ।
तथा, | आशातना च
जायते | एवम्=अ-कृत-कृत्यत्वा-ऽऽपादनेन ।

इति गाथा-ऽर्थः ॥ १६२ ॥

तअ-ऽहिग-णिवत्तिए गुण-ऽंतरं णऽत्थि एत्थ णियमेणं ।
इय एअ-गया हिंसा स-दोसमो होइ णायव्वा." ॥ १६३ ॥

तद्, | अस्ति
अधिक [धिकृत] निवृत्या=हेतु-भूतया | अत्र
गुणा ऽन्तरम् | नियमेन = पूजा-ऽऽदौ ।
न
इय (इति) | स दोषैव
एतद् गता=पूजा ऽऽदि गता | भवति
हिंसा | ज्ञातव्या = कस्यचिदऽनुपकारात् "

इति-गाथा ऽर्थ. ॥ १६३ ॥

‡ अत्रोत्तरम्, :—

"उवगारा-ऽ-भावे वि हु चिंता-मणि-जलण-चंदणा-ऽऽईणं ।
विहि-सेवगस्स जायइ तेहिंतो सो पसिद्धमिणम्". ॥ १६४ ॥

‡ उपकारा-ऽ-भावेऽपि=[विषया-ऽऽदे] | जायते
चिन्ता मणि ज्वलन चन्दना ऽऽ | तेभ्य =एव
दिभ्यः=सकाशात् | स.=उपकारः,
विधि-सेवकस्य=-पुं स'

प्रसिद्धमेतद् = लोके," इति ॥१६४॥

**इय कय-किच्चेहिंतो तब्भावे णऽत्थि कोइ वि विरोहो.।**
**एत्तोच्चिय ते पुज्जा. का खलु आसायणा तीए ?॥१६५॥**

| | |
|---|---|
| एवम् | नाऽस्ति |
| कृत-कृत्येभ्यः = पूज्येभ्यः सकाशात् | कश्चिदऽपि |
| तद्-भावे = उपकार-भावे | विरोधः, इति । |
| अत एव = कृत-कृत्यत्वाद् गुणाद् | पूज्याः = एव । |
| ते = भगवन्तः | |
| [एवं च–] | आशातना |
| का | तया = पूजया ? । |
| खलु | |

इति-गाथा-ऽर्थः ॥ १६५ ॥

**अहिगरण-णिवित्ती वि इहं, भावेणऽहिगरणा णिवित्तीओ.।**
**तद्दंसण-सुह-जोगा गुण-ऽंतरं तीए परिसुद्धं. ॥१६६॥**

| | |
|---|---|
| ‡ अधिकरण-निवृत्तिरऽपि | अत्र = पूजा-ऽऽदौ, |
| भावेन | अधिकरणान्निवृत्तेः = कारणात् । |
| तद्-दर्शने शुभ-योगात् | तस्याम् = पूजायाम् |
| गुणा-ऽन्तरम् | (परिशुद्धम्) । इति-गाथा-ऽर्थः ॥१६६ |

**ता, एय-गया चेवं (व) हिंसा "गुण-कारिणी" त्ति विण्णेया.।**
**तह, भणिय-णायओ च्चिय एसा अप्पेह जयणाए. ॥१६७॥**

| | |
|---|---|
| तत = तस्मात्, | "गुण-कारिणी" |
| "एतद्-गताऽपि = पूजा गताऽपि | इति |
| एवम् (व) | विज्ञेया । |
| हिंसा | |

तथा,
भणित न्यायतश्च
एव=अधिक-निवृत्त्या
एषा = हिंसा
अल्पा
इह यतनया। इति गाथा ऽर्थः ।।१६७

तह, संभवंत-रूवं सव्वं सव्व-ण्णु-वयणओ एअं. ।
तं णिच्छिअं[क] हिआ ऽऽगम-पउत्त-गुरु-संपयाएहिं. ॥१६८

‡ तथा,
सम्भवत्-स्व रूपम्
सर्वम्
तत्
निश्चितम्
सर्व ज्ञ वचनतः
एतत् ।
[कथिता ] हिता-ऽऽगम प्रयुक्त-गुरु संप्रदायेभ्य

[त णिच्छिअ [क] हिआ-ऽऽगम पउत्त-गुरु-सपयाएहिं
एतद्=यदुक्तम् ,
तत्
निश्चित्य
सर्व-ज्ञा-ऽवगत–
कथिता-ऽऽगम-प्रयुक्ता-ऽ-निधारित-गुरु सप्रदायेभ्यः = सकाशात्]॥१६८॥

"वेय-वयणं तु णेवं, अ-पोरुसेयं तु तं मयं जेणं ।
इअम् ऽच्च-ऽ त-विरुद्धं "वयणं च" "अ-पोरिसियं च"॥१६९॥

‡ वेद वचन तु न
अ पौरुषेयमेव
तत्
इदम्
यदुत, —
"वचन च"
एवम्=सभवत् स्व रूपम् ,
मतम् ,—
येन ।
अत्य-ऽन्त विरुद्धम्=वर्तते,
"अ पौरुषेय च" ।
इति-गाथा ऽर्थ ॥१६९॥

‡ एतद्-भावनायायाऽऽह, :—

जं, "वुच्चइ" त्ति "वयणं." पुरिसा-ऽ-भावे अ णोवमेअं, ति. ।
ता तस्सेवाऽ-भावो णियमेण अ-पोरिसेयत्ते. ॥ १७० ॥

यद्=यस्मात्,
"उच्यते" इति
पुरुषा-ऽ-भावे तु
तत्,
तस्यैव = वनस्यैव
अ-भावः

"वचनम्" = [ अयमऽन्व-ऽर्थः ]
इत्य-ऽन्व-ऽर्थ-संज्ञा ।
नैवमेतत् = "नोच्यते" इत्य-ऽर्थः ।
नियमेन,
अ-पौरुषेयत्वे = सति आपद्यते ।'१७०॥

तव्वावार-विरहिअं ण य कत्थइ सुच्चइ इहं वयणं. ।
सवणे वि य, णाऽऽसंका अ-दिस्स-कत्तुब्भवाऽवेइ."॥१७१॥
[तव्वावार-विउत्तं ण य कत्थइ सुव्वई ह तं वयणं. ।]

‡ तद्-व्यापार-विरहितम्=[शून्यम्]
न च कदाचित् = न [क्वचित्]
श्रूयते
‡ श्रवणेऽपि च = [सति],
न
आशङ्का

इह= लोके
[तद्]
वचनम् ।
अ-दृश्य-कर्त्रुद्-भवा
अपैति, = प्रमाणा-ऽ-भावात् ।"
इति-गाथाऽर्थः ॥ १७१ ॥

"अ-दिस्स-कत्तिगं णो अण्णं सुव्वइ, कहं णु आसंका ?" ।
सुव्वइ पिसाय-वयणं, कयाइ, एअं तु ण सदेव. ॥१७२॥

‡ "अ-दृश्य-कर्तृकम्
नो=नैव
अन्यत् *

श्रूयते,
कथं-च (नु)
आशङ्का ?="वि-पक्षा-ऽ-दृष्टेः,"
इत्य-ऽर्थः ।"

---

* कलकत्ता-हस्त-लिखित-पुस्तके—अन्यतः ।

‡ अत्राऽऽह, —

| "श्रूयते | पिशाच-वचनम् । |
|---|---|
| ‡ कदाचित् = कथञ्चन, लौकिकम् [एतत्] | |
| ‡ एतत्तु=वैदिक [विद-वचन]मऽ-पौरुषेयम् | सदैव |
| न | श्रूयते" ॥ १७२ ॥ |

‡ यथा-ऽभ्युपगमे दूषणमाऽऽह, :—

"वण्णा-ऽऽद्-ऽ-पोरुसेयं." "लोइअ-वयणाणऽवीह सव्वेसिं.।
वेयम्मि को विसेसो? जेण तहिं एसऽ-सग्गहो" ॥१७३॥

| ‡ "वर्णा-ऽऽदि | अ-पौरुषेयम्," |
|---|---|
| ‡ "लौकिक वचनानामऽपि इह | सर्वेषाम् = वर्णा [वर्ण-सत्त्वा-]-ऽऽदि-वाचकत्वा-ऽऽदे पुरुषैरऽ करणात् [ रऽ-विकरणात् ] । |
| वेदे | को विशेषः ? |
| येन, तत्र— | एषः अ-सद्-ग्रहः=अ-पौरुषेयत्वा ऽ-सद्-ग्रह, इति" ॥ १७३ ॥ |

"ण य णिच्छओ वि हु तओ जुज्जइ पाय कहं चि, सण्णाया.।
जं तस्सऽत्थ-पगासण-विसएह अइंदिया सत्ती ? ॥१७४॥

| ‡ "न च निश्चयोऽपि ततः = वेद-वाक्यात् | युज्यते प्रायः क्वचित्=वस्तुनि सन् न्यायात् । |
|---|---|
| यद् = यस्मात्, तस्य=वेद-वचनस्य अर्थ प्रकाशन-विषया | इह = प्रक्रमे अतीन्द्रिया शक्तिः ?। इति-गाथा-र्थः. ॥१७४॥ |

**णो पुरिस-मित्त-गम्मा तद्-ऽतिसओ वि ण बहु-मओ तुम्हं. ।**
**लोइअ-वयणेहिंता दिट्ठं च कहिं वि [चि] वेहम्मं. ? ॥ १७५॥**

‡ न [नो] | पुरुष-मात्र-गम्या=एषा ।
तद्-ऽतिशयोऽपि | बहु-मतः
न | युष्माकम्=अतीन्द्रिय-दर्शी, ।
लौकिक-वचनेभ्यः=सकाशात् | कथंचित् [कथमऽपि]
दृष्टं च | वैधर्म्यम् ?=वेद वचनानाम् ।"

इति-गाथा-ऽर्थः ॥ १७५ ॥

**ताणीह पोरिसेयाणि,❀ अ-पोरिसेयाणि वेय-वयणाणि. ।**
**सग्गुव्वसी-प्पमुहाणं दिट्ठो तह अत्थ-भेओ वि. ? ॥ १७६॥**

‡ "तानि | पोरुषेयाणि=लौकिकानि ।"
इह |
"अ-पौरुषेयाणि | वेद-वचनानि"

इति वैधर्म्यम् ।

‡ "स्वर्गोर्वशी-प्रमुखानाम्=शब्दानाम् | तथा
दृष्टः | अर्थ-भेदोऽपि = [अप्सरोर्व्या-
 | ऽऽदि-रूपः ] ?

"एवं च—

य एव लौकिकाः, त एव वैदिकाः ।
स एवैषामऽर्थः, इति ।
यत् किञ्चिदेतद्" ॥ १७६ ॥

**"ण य तं स-हावओ च्चिय स-ऽत्थ-पगासण-परं पईओ व्व. ।**
**समय-विसेआ-ऽ-जोगा, मिच्छत्त-पगास-जोगा य. ॥ १७७॥**

❀ वेय-वयणा ण-पोरिसियाणि. कल० हस्त-लिखित-पुस्तके ।

‡ न च
तद्=वेद वचनम्
स्व-भावतः
एव
स्वा-ऽर्थ प्रकाश-परम्,
प्रदीपवत् ।

"कुतः ?" इत्याऽऽह, —
समय-विभेदा ऽ-योगात्= संकेत भेदा ऽ-भावात्,
मिथ्यात्व-प्रकाश-योगाच्च = "क्वचिदे तदा ऽऽपत्तेः" इति भाव ॥१७७॥

‡ तथाऽऽह, :—

इंदीवरम्मि दीवो पगासइ रत्तयं अ-संतं पि, ।
चंदो वि पिअ-वत्थं "धवलं" ति, ण [य] णिच्छेओ त्तो.॥१७८॥

इन्दीवरे
दीपः
प्रकाशयति
रक्तताम्
अ सतीमऽपि,

चन्द्रोऽपि
पीत-वस्त्रम्
"धवलम्" इति=प्रकाशयति ।

न
निश्चयः
ततः=वेद वचनात् व्यभिचारिणः ।
इति गाथा-ऽर्थः ॥ १७८ ॥

एवं णो कहिया-ऽऽगम-पओग-गुरु-संपयाय-भावो ऽपि, ।
जुज्जइ सुहो इहं (अं) खलु णाएण, छिन्न-मूलत्ता. ॥१७९॥

‡ एवम्,
न
कथिता-ऽऽगम-प्रयोग-गुरु-सम्प्रदाय-भावोऽपि= प्रकृत्य ऽङ्ग-भूतः
(शुभ),
यतः —
इह खलु=वेद-वचने
न्यायेन,

छिन्न-मूलत्वात् = "तथा-विध-वचना-ऽ-संभवात् ।"

इति-गाथा-ऽर्थः ॥ १७९ ॥

"ण कयाइ इओ कस्सइ इह णिच्छयमो कहिंचि वत्थुम्मि ।
जाओ." त्ति. कहइ एवं जं सो तत्तं, स वामोहो. ॥१८०॥

‡ "न | निश्चयः
कदाचित् | एव
अतः = वेद-वचनात् | क्वचिद्
कस्यचिद् | वस्तुनि
इह | जातः"
| इति ।

कथयति | तत्त्वम्,
एवम् = सति | सः
यद् | व्यामोहः = स्वतोऽप्यऽ-ज्ञात्वा कथनात्
असौ = वैदिकः | [ ऽप्यऽ-ज्ञत्वात् ] ॥ १८० ॥

तओ अ आगमो जो विणेय-सत्ताण, सो वि एमेव ।
तस्स पओगो चेवं, अ-णिवारणगं च नियमेणं. ॥१८१॥

‡ ततश्च = वैदिकादर्थात् [ वैदिका-ऽऽचार्याद् | विनेय-सत्त्वानाम् = संबन्धी,
आगमः | सः
यः = व्याख्या-रूपः | अपि
| एवमेव = व्यामोह एव ।

तस्य = आगमा-ऽर्थस्य | च
प्रयोगः | एवमेव = व्यामोह एव ।

अ-निवारणं च | नियमेन = व्यामोह एव ।

इति-गाथा-ऽर्थः ॥ १८१ ॥

णेवं परंपराए माणं एत्थ गुरु-संपयाओऽवि ।
रूव-विसेस-ट्ठवणे जह जच्च-ऽंधाण सव्वेसिं. ॥१८२॥

‡ न
एवम्
परंपराया
मानम्,
अत्र = च व्यतिकरे
गुरु संप्रदायोऽपि,

निदर्शनमाऽऽह, —

रूप-विशेष स्थापने = सितेतरा ऽऽदि-रूप विशेष-स्थापने
यथा
जात्य-ऽन्धानाम
सर्वेषाम्=अना ऽऽदि मताम् ।.१८२॥

‡ परा ऽभिप्रायमाऽऽह, —

"भवतो वि य सव्व-ण्णू सव्वो आगम-पुरस्सरं जेणं, ।
ता सो अ-पोरुसेओ, इयरो वा णाऽऽगमो जो उ." ॥१८३॥

"भवतोऽपि च,
सर्व ज्ञः
सर्वः
आगम-पुरस्सर',
येन=कारणेन ।

"स्वर्ग-केवला ऽर्थिना तपो ध्याना-ऽऽदि-कर्त्तव्यम् ।"
इति आगमः, अतः प्रवृत्तेः, इति ।

तद्,
असौ
अ-पौरुषेयः ।

इतरः = अना-ऽऽदिमान् सर्वज्ञ [अना-ऽऽदिमत् , सर्व ज्ञ-साधनत्वात्]
नाऽऽगमादेव=कस्य चित् तमऽन्त-रेणाऽ पि भावात् ।"

इति गाथा-ऽर्थः ॥ १८३ ॥

‡ अत्रोत्तरम् , :—

णोभयमऽवि, जमऽणा-ऽऽई बीय-ऽंकुर-जीव-कम्म-जोग-समं,।
अह वऽत्थतो उ एवं, ण वयणओ, वत्त-ऽहीणं तं. ॥१८४॥

न = नैतदेवम् | उभयमऽपि=आगमः, सर्व-ज्ञश्च।
यद्=यस्माद,
अना-ऽऽदि | बीजा-ऽङ्कुर--जीव-कर्म-योग-समम्।

"न हि—

अत्र—

"इदं पूर्वम् , इदं न।" इति व्यवस्था।

ततश्च-"यथोक्त-दोषा-ऽ-भावः।"

‡ अथवा,

अर्थत एव | एवम्=बीजा-ऽङ्कुरा-ऽऽदि-न्यायः सर्व एव।

"कथञ्चिदाऽऽगममाऽसाद्य, सर्व-ज्ञो जातः, तद-ऽर्थश्च तत्साधकः।"

इति—

न वचनतः = न वचनमेवाऽऽश्रित्य,

"मरु-देव्या-ऽऽदीनां प्रकारा-ऽन्तरेणाऽपि भावात्।

‡ तद्=वचनम् | वक्त्र-ऽधीनम्,

"न तु

अना-ऽऽद्यऽपि, वक्तारमऽन्तरेण वचन-प्रवृत्तेरऽ-योगात् [उपाया-ऽन्तरा-ऽ-भावात्]

तद-ऽर्थ-प्रतिपत्तिस्तु—

क्षयोपशमा-ऽऽदेरऽ-विरुद्धा, तथा-दर्शनात्।"

एतत् सूक्ष्म-धिया भावनीयम्॥ १८४॥

**"वेय-वयणम्मि सव्वं णाएणाऽ-संभवंत-रूवं जं।**

**ता, इयर-वयण-सिद्धं वत्थु कहं सिज्झइ तत्तो ?"॥१८५॥**

‡ वेद-वचने | अ-संभवत्-रूपम्,
सर्वम् = आगमा-ऽऽदि, | यद् = यस्मात्।
न्यायेन |

| | |
|---|---|
| तत् = तस्मात् , | कथम् |
| इतर-वचन-सिद्धम्=सद्-वचन-सिद्धम् | सिध्यति |
| वस्तु. = हिंसा दोषा-ऽऽदि | ततः = वेद वचनाद् ? । |

इति-गाथा ऽर्थं ॥ १८५ ॥

ण हि रयण-गुणा ऽ-रयणे कया-चिद ऽवि होंति उवल-साहम्मा
एवं वयण-ऽ नर-गुणा ण होंति सामण्ण वयणम्मि. ॥१८६॥

| | |
|---|---|
| न हि | कदाचिदऽपि |
| रत्न-गुणाः=शिरः शूल शमना ऽऽदय | भवन्ति |
| अ-रत्ने | उपल साधर्म्यात् । |
| ‡ एवम्— | न भवन्ति |
| वचना-ऽन्तर गुणा =हिंसा-दोषा-ऽऽदयः | सामान्य वचने = [ विशेष गुणा ऽ योगात् ] ॥ १८६ ॥ |

तो एवं सण्-णाओ ण बुहेण अ-ट्ठाण-ट्ठावणाए उ ।
सइ लहुओ कायव्वो चास-पंचास-णाएणं. ॥ १८७ ॥

| | |
|---|---|
| ‡ तद, | अ-स्थान-स्थापनया = [वचना ऽन्तरे नियोगेन ] |
| एवम्— | सदा |
| सन्-न्याय. = विशेष वचनतः | लघु |
| न | कर्तव्यः । |
| बुधेन | |

["कथम् ?" इत्याऽऽह, —

"चास पञ्चाशन्-न्यायेन (?)=] अ-सभविनोऽ सभव प्रदर्शन गत्या (?) ॥१८७॥

‡ तत्र युक्तिमाऽऽह, :—

तह, वेदे च्चिय भणियं सामण्णेणं, जहाः-"ण हिंसिज्जा-।
भूआणि." फलुद्देसा पुणो व "हिंसिज्ज." तत्थेव. ॥१८८॥

| | |
|---|---|
| तथा, | भणितम् |
| वेदे | सामान्येन=उत्सर्गेण, |
| एव | |
| यथा, :— | हिंस्यात् |
| "न | भूतानि।" |
| फलोद्देशात् | "हिंस्यात्" |
| पुनश्च | तत्रैव = भणितम्। |

"अग्नि-होत्रं जुहुयात् स्वर्ग-कामः।" इति। इत्य-ऽर्थः ॥ १८८ ॥

ता, तस्स पमाणत्ते वि एत्थ णियमेण होइ दोसु." त्ति-।
फल-सिद्धिए वि, सामण्ण-दोस-विणिवारणा-ऽ-भावा.॥१८९॥

| | |
|---|---|
| ‡ 'तत्, | नियमेन = चोदनायाम् |
| तस्य = वेदस्य | भवति |
| प्रमाणत्वेऽपि, | दोषः" |
| अत्र | इति। |

फल-सिद्धावऽपि = सत्याम्।
"कुतः ?" इत्याऽऽह, :—
सामान्य-दोष-निवारणा-ऽ-भावात् = औत्सर्गिक-वाक्या-ऽर्थ-दोष-प्राप्तेरेव।
इति-गाथा-ऽर्थः ॥ १८९ ॥

‡ इहैव निदर्शनमाऽऽह, :—

जह, वेज्जगम्मि दाहं ओहेण निसेहिउं, पुणो भणियं, :-।
"गंडा-ऽऽइ-खय-णिमित्तं करेज्ज विहिणा तयं चेव."॥१९०॥

यथा, वैद्यके,
दाहम्-अग्नि-विकारम्
(पुनः)
' गण्डा ऽऽदि क्षय-निमित्तम् =
"व्याध्य-ऽपेक्षया" इत्य ऽर्थः
कुर्याद्
ओघेन=उत्सर्गत
निषिध्य=दुःख करत्वेन,
भणितम्=तत्रैव फलोद्देशेन, :—
विधिना
तमेव = दाहम् । "

इति-गाथा ऽर्थ ॥ १९० ॥

तत्तो वि किरमाणो ओह-णिसेहुब्भवो तहि दोसो ।
जायइ फल-सिद्धिए वि, एवं इत्थऽवि णायव्वं. ॥१९१॥

‡ ततोऽपि=वचनात्
क्रियमाणे=अपि दाहे
ओघ-निषेधोद् भवः="ओघ निषेधाद् भवति" औत्सर्गिक निषेध विषय
तत्र
दोष =दुःख करण लक्षणः
जायते
फल-सिद्धौ=गण्ड क्षया-ऽऽदि रूपाया सत्याम्
अपि ।

‡ एवम्—
अत्र=वेदे
अपि
विज्ञेयम् ।

"चोदनातोऽपि प्रवृत्तस्य फल भावेऽप्युत्सर्ग निषेध-विषयो दोषः ।"

इति गाथा-ऽर्थ ॥ १९१ ॥

कयमित्थ पसंगेणं. जहोचिया चेव दव्व-भाव-त्थया ।
अण्णो-ऽण्ण-समणु-विद्धा णियमेणं होंति णायव्वा. ॥१९२॥

‡ अत्र= * द्रव्य-स्तव विचारे
कृतम्
प्रसङ्गेन ।

---

* वस्तु-विचारे कल०

: यथोचितावेव
द्रव्य-भाव-स्तवौ
अन्यो-ऽन्य-सम-ऽनुविद्धौ = प्रथम-
(प्रधान)-गुण-भावेन
[नियमेन
भवतः
ज्ञातव्यौ ।
अन्यथा, स्व-रूपा-ऽ-भावः] ॥१९२ ।

: [अनयोर्विधिमाऽऽह, :— ]

अप्प-विरियस्स पढमो, सह-कारि-विसेस-भूअमो सेओ. ।
इयरस्स बज्झ-चाया इयरो च्चिय एस परम-ऽत्थो. ॥१९३॥

अल्प-वीर्यस्य = प्राणिनः
प्रथमः = द्रव्य-स्तवः
सह-कारि-विशेष-भूतः = [वीर्यस्य]
अतः—
श्रेयान् ।

इतरस्य = बहु-वीर्यस्य साधोः
बाह्य-त्यागात्=बाह्य-द्रव्य-स्तव(?) त्यागे
इतरः
एव = श्रेयान् , "भाव-स्तवः" इति ।
: एषः
परमा-ऽर्थः = अत्र-क्रममाऽश्रित्य
द्रष्टव्यः ॥ १९३ ॥

: विपर्यये दोषमाऽऽह, :—

दव्व-त्थयं पि काउं ण तरइ जो अप्प-विरिअत्तेणं, ।
परिसुद्धं भाव-त्थयं काहो सो-ऽ-संभवो एस. ॥१९४॥

द्रव्य-स्तवमऽपि
कर्तुम् = औचित्येन
न
शक्नोति
यः = [सत्त्वः]
अल्प-वीर्यत्वा-ऽऽदेः = [अल्प-वीर्य-
त्वेन हेतुना ],

"परिशुद्धम्
भाव-स्तवम् = "यथोक्तम्" इत्य-ऽर्थः
करिष्यति = " इति,
अ-संभवः
एषः=व(ब)ला-ऽ-भावात् ॥ १९४ ॥

‡ तदाऽऽह, :—

जं सो उक्किट्ठयरं अविक्खइ विरियं इहं णियमा. ।
ण हि पल-सयं पि वोढुं अ-समत्थो पव्वयं वहइ. ॥१९५॥

| | |
|---|---|
| [ यद्, | वीर्यम् = शुभाऽऽत्म परिणाम रूपम् |
| असौ = भाव स्तवः | इह |
| उत्कृष्टतरम् | नियमात् । |
| अपेक्षते | |
| न हि— | अ समर्थः =मन्द वीर्यस्सत्त्व , |
| पल-शतमऽपि | पर्वतम |
| वोढुम् | वहति । ] |

"भाव-स्तवोचित-वीर्य प्राप्त्युपायोऽपि द्रव्य-स्तवः एव,
न च प्रतिमा-पालनवदऽ-नियम ।
"जुत्तो पुण एस कमो ।" इत्या ऽऽदिना, द्रव्या ऽऽदि-विशेषेण नियमनात्,
गुण-स्थान-क्रमा ऽ व्यभिचाराच्च, " इति दिग् ।
"अत्र पल शत तुल्य -द्रव्य स्तवः ।
पर्वत-तुल्यस्तु भाव स्तवः" इति रहस्यम् ॥ १९५ ॥

‡ उक्तमेव स्पष्टयति, —

जो बज्झ-चाएणं णो इत्तरियं पि णिग्गहं कुणइ, ।
इह अप्पणो सया से सव्व-च्चाए कह कुज्जा ? ॥१९६॥

| | |
|---|---|
| यः | निग्रहम् |
| बाह्य त्यागेन = वाह्य चित्त -विषय व्ययेन | न करोति = वन्दना-ऽऽदौ |
| | इह |
| इत्वरमऽपि | आत्मनः, |

क्षुद्रः
सदा असौ = यावज्जीवम्
सर्व-त्यागेन

कथम्
कुर्यात् ?
"आत्मनो निग्रहम्" ।

इति-गाथा-ऽर्थः ॥ १९६ ॥

‡ अनयोरेव गुरु-लाघव-विधिमाऽऽह, :—

आरंभ-च्चाएणं नाणा-ऽऽइ-गुणेसु वड्ढमाणेसु ।
दव्व-त्थय-परिहाणी वि ण होइ दोसाय परिसुद्धा. ॥१९७॥

आरम्भ-त्यागेन = हेतुना
ज्ञाना-ऽऽदि गुणेषु
वर्द्धमानेषु = सत्सु,
द्रव्य-स्तव-हानिः

अपि
तत्कर्तुः
दोषाय
न भवति;
परिशुद्धा = सा-ऽनुबन्धा ।

इति-गाथा-ऽर्थः ॥ १९७ ॥

‡ इहैव तन्त्र-युक्तिमाऽऽह, :—

एत्तो च्चिय णिद्दिट्ठो धम्मम्मि चउ-व्विहम्मि वि कमोऽयं ।
इह दाण-सील-तव-भावणामए, अण्णहाऽ-जोगा. ॥१९८॥

अत एव = द्रव्य-स्तवा-ऽऽदि-भावात्
निर्दिष्टः = भगवद्भिः
धर्मे
चतुर्विधेऽपि
अन्यथा,

क्रमोऽयम् = वक्ष्यमाणः
इह = प्रवचने
दान-शील-तपो-भावनामये = धर्मे,
अ-योगाद् = अस्य धर्मस्य ।

इति-गाथा-ऽर्थः ॥ १९८ ॥

‡ एतदेवाऽऽह, :—

संतं पि बज्झम-ऽ-णिच्चं थाणे दाणं पि जो न वियरेइ, ।
इय खुद्दओ कहं सो सीलं अइ-दुद्धरं धरइ ? ॥१९९॥

अ-सीलो ण य जायइ सुद्धस्स तवस्स हंदि विसओ वि. ।
जह-सत्तीए ऽ(अ]-तवस्सी भावेइ कहं भावणा-जालं ? ॥२००॥

सद् = [अपि] विद्यमानम्
बाह्यम् = आत्मनो भिन्नम्
अ-नित्यम् = अ शाश्वतम्
स्थाने = पात्रा-ऽऽदौ

दानमऽपि = पिण्डा ऽऽदि
न
यः
वितरति = न ददाति, क्षौ-द्यात्,

"इय" = एवम्
क्षुद्र = वराकः
कथम्
असौ

शीलम् = महा पुरुषा ऽऽसेवितम्
अति-दुर्धरम्
धारयति = ? 'नव" इत्य ऽर्थः ।
इति गाथा-ऽर्थ ॥ १९९ ॥

अ-शीलश्च
न जायते
शुद्धस्य
यथा शक्ति वा
अ तपस्वी = मोह परतया
भावयति

तपसः = मोक्षा-ऽङ्ग भूतस्य
हंदि
विषयोऽपि ।
कथम्
भावना जालम् ? = तत्त्वतो नैव ।
इति गाथा ऽर्थ ॥ २०० ॥

एत्थ कम-दाण-धम्मो दव्व-त्थय-रूवमो गहेयव्वो. ।
सेसा उ सु-परिशुद्धा णेया भाव-त्थय-स-रूवा. ॥२०१॥

अत्र क्रमे
दान-धर्म
शेषास्तु
सु परिशुद्धा = शील धर्मा ऽऽदय

द्रव्य स्तव रूपः = एव
ग्राह्य. = अ-प्रधानत्वात् ।
ज्ञेयाः
भाव-स्तव-रूपाः=प्रधानत्वात् ।२०१।

‡ इहैवाऽतिदेशमाऽऽह, —

इह आगम-जुत्तीहि य तं तं सुत्तमऽहिगिच्च धीरेहिं ।
दव्व-त्थया-ऽऽइ-रूवं विवेइयव्वं सु-बुद्धीए. ॥ २०२ ॥

| | |
|---|---|
| 'इय' एवम् | धीरैः = बुद्धिमद्भिः |
| आगम-युक्तिभिः | द्रव्य स्तवा-ऽऽदि-रूपम् भावना ऽऽलोच्य, |
| तत् तत् | निपुणकम् |
| सूक्ष्मम् | नय-युक्त्या : |
| अधिकृत्य | |

इति-गाथा-ऽर्थः ॥ २०२ ॥

: उपसंहारमाऽऽह, :

**एसेह थय-परिन्ना समासओ वन्निया मए तुब्भं । वित्थरओ भाव-ऽत्थो इमीए सुत्ताउ णायव्वो. ॥२०३॥**

| | |
|---|---|
| एषा | समासेन |
| इह | वर्णिता |
| स्तव-परिज्ञा = पद्धतिः | मया |
| | युष्माकम् । |
| विस्तरतः | अस्याः = स्तव-परिज्ञायाः |
| भावा-ऽर्थः | सूत्रात् |
| | ज्ञातव्यः । |

इति । शिवम् ॥ २०३ ॥

जयइ थय-परिन्ना, सार-निट्ठा, सु-वन्ना,
सु-गुरु-कय-अणुन्ना, दाण-वक्खाण गुन्ना, ।
नय-निउण पइन्ना, हेउ-दिट्ठ-ऽंत-पुन्ना,
गुण-गण-परिकिन्ना, सव्व-दोसेहिं सुन्ना. । १ ॥

इति स्तव-परिज्ञया किमऽपि तत्त्वमुच्चैस्तरां
यशो-विजय-वाचकैर्यदुदऽभावि भावा-ऽर्जितम् ।
ततः कु-मत-वासना-विष-विकार-वान्तेर्बुधा
सुधा-रस-पानतो भवत तृप्ति-भाजः सदा. ॥ २ ॥

तन्त्रैः किमऽन्यैर्भग्नैव भ्रान्तिः स्तव-परिज्ञया ।
ध्वस्ता पान्थ-तृषा नद्या कूपाः सन्तु सहस्रशः ॥ ३ ॥ ॥६७॥

[ अष्ट-त्रिंशत्-गाथा-गत-परिष्कार-हार्दं प्रसादीकृतमाऽऽराध्य-पादैराऽऽचार्य-श्री-विजय-नन्दन सूरिभि शास्त्र-वचन-गाम्भीर्य-विद्वद्-वरैं ]

‡ एव च

"आज्ञा-शुद्ध वीतराग-गामि भाव-स्तव-हेतु -अनुष्ठानम्-द्रव्य स्तव ।" इति निर्व्यूढम् ।

भाव स्तवेऽति व्याप्ति वारणाय विशेष्यम् ।

अत्र—

विशेषण-द्वयम्-भाव स्तव-हेतुता-ऽवच्छेदक परिचायकम् ।

इति-"भाव स्तव हेतुत्वमेव लक्षण सिध्यति ।"

तत्राऽऽह, :—

जं पुण एअ-विउत्तं एग-ऽन्तेणेव भाव-सुण्णं ति ।
तं विसयम्मि वि ण तओ भाव-त्थया-ऽ-हेउओ उचिओ ॥३८॥

| | |
|---|---|
| यत् | एतद्-वियुक्तम्=औचित्या ऽन्वे-षणा ऽऽदि-शून्यम्, |
| पुन | |
| अनुष्ठानम् | |
| तद् | एका-ऽन्तेनैव |
| अनुष्ठानम् | भाव-शून्यम्, |
| | इति । |
| विषये = वीत-रागा ऽऽदौ | न |
| अपि | तकः = द्रव्य-स्तवः, |
| भाव त्थया ऽ हेउओ" त्ति । | उचित.—[ यथा-भूत:] |
| ( भाव स्तवा-ऽ हेतुत., इति ) | "भाव स्तवा-ऽङ्ग न ।" |
| "धर्म पर-निर्देशात्— | |
| भाव-स्तवा ऽ हेतुत्वात् ।" | |

(स्पष्टा-ऽन्वयः—पुन , "यदऽनुष्ठानं एतद् वियुक्तं (औचित्या-ऽन्वेषणा ऽऽदि शून्यम्) तद् अनुष्ठान एका ऽन्तेनैव भाव-शून्यम्," इति हेतो विषयेऽपि वीत-रागा-ऽऽदावऽपि भावस्तवा ऽ-हेतुत्वात् न तक ( द्रव्य स्तवः) उचित. (भाव स्तवा ऽङ्गम्) भवति ॥३८॥ )

[1]अ-प्रधानस्तु भवत्येव ।

[2]हेतु-साध्या-ऽ-विशेष-परिहाराय—

[3]"अ-प्रधान-व्यावृत-द्रव्य-स्तवत्वेन व्यपदेश्यो न" इति साध्यं व्याख्येयम् ।

---

१. अ-प्रधानो द्रव्य-स्तवस्तु भवत्येव ।

२. औचित्य-शून्यं यद्-ऽनुष्ठानम्, न तद्-ऽनुष्ठानं द्रव्य-स्तवः, भाव-स्तवा-ऽ-हेतुत्वात् ।
यत्र यत्र भाव-स्तवा-ऽ-हेतुत्वम्, तत्र तत्र द्रव्य-स्तवत्वा-ऽ-भावः ।
यद् भाव-स्तवा-ऽ-हेतुत्वा-ऽ-भाववद्, तद् द्रव्य-स्तवा-ऽ-भाववद् ।
यो द्रव्य-स्तवा-ऽ-भावः, स एव भाव-स्तव-हेतुत्वा-ऽ-भावः । एवम्-हेतु-साध्ययोरैक्यम् ।
तत्परिहाराय—

३. अ-प्रधान-द्रव्य-स्तवः—अ-प्रधान-व्यावृत-द्रव्य-स्तवत्वेन व्यपदेश्या-ऽ-भाववान्, भाव-स्तव-हेतुत्वा-ऽ-भाववत्वात् । (हेतुत्व-ऽ-भावात्) यत्र यत्र भाव-स्तव-हेतुत्वा-ऽभाववत्वम्, तत्र तत्र अ-प्रधान-व्यावृत्त-द्रव्य-स्तवत्वेन व्यपदेश्यत्वा-ऽ-भाववत्वम् ।
एवम्—यत्र यत्र भाव-स्तव-हेतुत्वम्, तत्र तत्र अ-प्रधान-व्यावृत्त-द्रव्य-स्तव-व्यपदेश्यत्वम् ।
एवम्—हेतु-साध्ययोर्भिन्न-विषयत्वम्

अत्र[4]—

यद्य[5]ऽपि (यद्वाऽपि)—

[6]शुद्धं तत्-तद्-द्रव्य स्तव [6]व्यक्तीनाम् आज्ञा-[7]विशिष्टानां वा,
न भाव-स्तवत्वा-ऽवच्छिन्ने हेतुत्वम्, व्यभिचारात्, अन-ऽनुगमाच्च ।

---

४. हेतु-साध्ययोर्व्याप्ति-प्रक्रमे

५. "न शुद्धं हेतुत्वम्" इत्यऽन्वयः ।
"नाऽपि शुद्धं हेतुत्वम्" इति चाऽन्वयः ।

६. "शुद्धम्" इति हेतुत्वस्य विशेषणम् । उत्तरत्रा-ऽपि-अध्याहार्यं एव विशेष्य-विशेषण-दले ।

७. प्रथमं तावत्—व्यभिचारा-ऽन-ऽनुगम-दोषयोः स्व-रूपे निदर्शनीये भवतः,—
(१) तत्सत्त्वे तत्सत्त्वमऽन्वयः ।
तद्-ऽ-भावे तद्-ऽ-भावो व्यतिरेकः ।
हेतु-सत्त्वे साध्य-सत्त्वमऽन्वयः ।

